# तारकम् ।



ब्रह्मश्रीमदज्जाडादिभट्ट

नारायणदासविरचितम् ।

चित्किटिदुर्गाधीश्वरप्रोत्साहेन



मुम्बय्यां

निर्णयसागराख्यमुद्रणयन्त्रालये बालकृष्ण रामचंद्र घाणेकरेण

मुद्रितम् ।

शके १८३२

सन १९१०



# प्रतिज्ञा.

अस्मिन्ग्रन्थे श्लोकेषु पादपूरणमात्रफलकपदमुपसर्गस्य वोपसर्गसमानाकारस्य पुनरुक्तिरप्रसिद्धोपसर्ग उताप्रसिद्धोपसर्गसमानाकारो भिन्नलिङ्गवचनसादृश्यं लोकातीतपदार्थवाचकशब्दो विना दिवूधातुघटितं नास्ति लुङ् लङ्लिटोऽधिक्रियन्ते क्रमशः प्रथमद्वितीयतृतीयसर्गेषु द्वितीयतृतीयसर्गयोर्भूतेतरक्रियावाचकतिङन्तरूपं न विद्यते पाणिनीयसूत्राणामवैदिकानामुदाहरणमेतत्काव्यम्.



# तारके प्रथमः सर्गः ।

## भूतेलुङधिकारः ।

उपजातिः ।

सा देवभाषाऽखिललोकमान्या
प्रसाधयाम्यद्य तयामदूहाम् ।
हर्षाय लोकस्य परिष्करोति
तनुं जनोऽनुत्तमभूषयैव ॥ १ ॥
स्वभावपाण्डित्यबलेन कुर्वे
काव्यं पतत्री सहसेव नीडम् ।
सदोषमप्युत्तपते कवित्वं
यथा कलङ्काऽङ्कितमिन्दुबिम्बम् ॥ २ ॥
स देवताऽधीनमनःप्रवृत्तिः
स्वातन्त्र्यसङ्कल्पितचारुकाव्यः ।
दयाऽऽर्द्रचित्तोऽश्रितसत्यवाक्यः
कलाचणः सत्कविरेव नाऽन्यः ॥ ३ ॥
विन्ध्यप्रदेशे क्वचिदस्ति चञ्च-
न्नदीतटे संश्रितकल्पनामा ।
ग्रामः पुरा तत्र महेश्वराऽऽख्य-
स्तपोधनो ब्राह्मणराडवात्सीत् ॥ ४ ॥
यथाऽर्थवाक्सन्नुतदिव्यतेजा
नक्तंदिवं पूजितदेवदेवः ।
पौराणिकः पूतयशा वदान्यः
स देवभाषानिपुणः कवीन्द्रः ॥ ५ ॥
मुदा यथाशक्त्यतिथीनतर्पी-
त्सदाऽऽत्मशिष्यानशिषत्स्वधर्मम् ।

न्यवीवृतद्रागपथाद्विमूढा-
न्स पण्डितः साधुजनानभाक्षीत् ॥ ६ ॥
बाल्यं गुरोरध्ययनेन तस्य
स्वभार्यया यौवनमिद्धकीर्तेः ।
अनायि सद्ब्राह्मणशेखरस्य
वृद्धत्वमन्तं तपसा समस्तम् ॥ ७ ॥
तं तस्य पत्नी सुदती प्रशान्ता
महाकुलीना कमनीयनेत्रा ।
संपूर्णजैवातृकबिम्बवक्त्रा
शतह्रदा मेघमिवाऽन्वसार्षीत् ॥ ८ ॥
भर्त्रा यथा सा कथितं पुराणं
श्रुत्वाऽशकन्मङ्क्षु तथैव वक्तुम् ।
प्रशस्तबुद्धिस्तपनीयगात्रा
प्रियंवदा सज्जनकीर्तनीया ॥ ९ ॥
तौ दम्पती निर्मलशीलयुक्तौ
प्रवृद्धसन्तानयशोविशालौ ।
सुखेषु दुःखेषु समानचित्ता-
वभ्राजि ताभ्यां धरणी चिराय ॥ १० ॥
पुण्याऽऽत्मनोः सद्गृहिणोस्तयोरु-
दभूत्कनिष्ठः परदेवतांऽशः ।
पुत्रेषु तं बालकवेषयुक्तं
मुदा दिवौकोनिवहोऽववर्णत् ॥ ११ ॥
प्रभो महादेव दयामयेश
त्वं लीलयेत्थं जगतीं तनित्वा ।
श्रुत्या भणित्वाऽखिलभूतकर्म
स्वमायया क्रीडसि निर्गुणोऽपि ॥ १२ ॥

भेदो यथा काण्डतरङ्गयोर्न
स्याच्तेऽस्य लोकस्य तथैव देव ।
सर्वः प्रपञ्चस्त्वयि कल्पितो वा
स्थाणौ भवेद्दस्युरिव भ्रमेण ॥ १३ ॥

धरामनुष्यैः परमाऽर्थदूरैः
क्रौर्याऽन्वितैस्तुच्छसुखाऽभिलाषैः ।
निपीडिता सम्प्रति नास्तिकैरि-
त्यजोऽपि तां त्रातुमिहाऽजनिष्ठाः ॥ १४ ॥

दृश्याऽप्यदृश्या सदसत्स्वरूपा
त्वदीयमाया भ्रमकारणं सा ।
दिगन्तरेखावदतीन्द्रियं ते
तत्वं जगन्नाटकसूत्रधार ॥ १५ ॥

त्वया विना किं सुखमस्ति तत्र
मन्यामहे शून्यमिवाऽखिलं तत् ।
सर्वं दिवं तावकपादचिह्नै-
र्धन्या भवत्यद्य धराऽप्रमेय ॥ १६ ॥

भक्त्यैव तेऽधीश्वर देवताऽपि
शक्नोति वेत्तुं परमाऽर्थतत्वम् ।
दृष्टिस्स्वरूपं मुकुरश्रियैव
विलोकितुं शक्यत आदिदेव ॥ १७ ॥

कान्भाग्ययुक्तानिह तावकीन-
मित्रत्वमाप्तुं तव गूढचर्याम् ।
ज्ञातुं त्वया रन्तुमनन्तभूमा-
वजीजनो नो वद देवदेव ॥ १८ ॥

त्वदीक्षणेनाऽऽत्मनि विश्ववारो
देदीप्यतेऽधीश्वर लीयते सः ।

नूनं तथाऽनूनकवस्तुसङ्गः
स्वप्ने यथा विभ्रमणेन देव ॥ १९ ॥

एकत्वसङ्ख्याप्रतिपादकाङ्को
निरन्तरं बोधयते बहुत्वम् ।
बिन्द्वन्वितः सुष्ठु यथा स्वभाव-
युतस्त्वमेकोऽपि तथाऽसि देव ॥ २० ॥

इत्थं स्तुवन्तं प्रमदाऽश्रुमन्तं
देवोऽगदीद्दिव्यगणं दयालुः ।
श्रिताऽनुकूलः कमनीयवाक्यं
भक्ताऽभयं सत्यमतीव गोप्यम् ॥ २१ ॥

नन्दामि हे देवसभ त्वदीय-
वाक्यैर्यथाऽर्थं प्रतिपादयद्भिः ।
वेदान्तगोप्यैरनुकम्पया त्वा-
मेतर्ह्यहं वच्म्यवतारहेतुम् ॥ २२ ॥

अस्मिन्कलौ सत्यदयाऽतिरिक्ताः
श्रद्धाविहीना मनुजा भवन्ति ।
निद्राऽशनस्त्रीरतिमात्रलोला
नक्तंदिवं नश्वरसम्पदन्धाः ॥ २३ ॥

तस्मादहं तान्बहुमूढचित्ता-
न्संसारघोराऽर्णवतो मनुष्यान् ।
उद्धारयिष्याम्युचितक्रमेण
विमोहयन्नद्भुतवर्तनेन ॥ २४ ॥

आनन्दयिष्यामि मदीयभक्ता-
नद्वैततत्त्वं मम दर्शयिष्ये ।
अहं सदा तान्कृपया नटिष्या-
म्यनन्तवेषैः सुजनैकवेद्यैः ॥ २५ ॥

विस्मृत्य तत्वं मम नित्यसत्य-
मश्रान्तमानन्दमयं यथेष्टम् ।
वशो भविष्याम्यखिलाऽर्थबन्ध-
सन्धानमूलप्रकृतेः कदाचित् ॥ २६ ॥
भक्ताय मूढाय विचक्षणायो-
न्मत्ताय धीराय सकैतवाय ।
तत्तद्रसान्दर्पणवद्यथेच्छं
निवेदयिष्येऽहमकामनोऽपि ॥ २७ ॥
नत्वा महादेवमिति ब्रुवन्तं
दिव्यव्रजोऽगान्निलयं स्वकीयम् ।
सद्योऽभिजातं तनयं विलोक्याऽ-
मोदिष्ट माताऽऽत्मकुलप्रदीपम् ॥ २८ ॥
प्रवर्ध्यते येन चराचरं तं
लीलामनुष्यं नितराऽऽत्मतृप्तम् ।
मोहादुपाऽङ्कस्त तदीयमाता
स्तन्येन सम्पोषितुमादिदेवम् ॥ २९ ॥
मायानिबद्धं मनुजाऽऽयुरेवं
नानाप्रकारैर्विरमेच्छुचस्तत् ।
यदा स्वमातुर्जठरादपस्र-
त्तदेत्यशोकोऽप्यरुदन्महात्मा ॥ ३० ॥
उन्मीलनं तस्य निमीलनं स्या-
दोष्ठस्य सर्वाऽऽयुषि शर्म कष्टम् ।
ते इत्यथाऽबूबुधतां कचाऽऽलिः
कालस्य वक्रां गतिमालुलोकत् ॥ ३१ ॥
यो रक्षकोऽभूद्भुवनस्य जोप-
मसद्ग्रहः स्प्रष्टुमशक्त नोयम् ।

प्रसूर्विभोस्तस्य गलेऽपि रक्षा-
बन्धं न्यभान्त्सीन्मणिमन्त्रपूतम् ॥ ३२ ॥
अजस्रमौष्ण्यं तनुते दिनेशः
समस्तसृष्टिस्थितिनाशहेतोः ।
यस्य प्रभावेन विभोः सुखं सोऽ-
स्वाप्सीद्धसन्त्यन्तिकमादिदेवः ॥ ३३ ॥
मुदन्वितः सन्ततसाक्षितत्व-
मद्वैतमात्मीयमथाऽतनिष्ट ।
स्तनन्धयो मञ्जुलनिर्विकार-
दृष्ट्या स आन्दोलनरम्यमञ्चे ॥ ३४ ॥
निजाऽऽत्मनो यस्य कदाऽपि नाऽन्य-
दृष्टिर्व्यराजीत्स सरोजमालाम् ।
ऐक्षिष्ट तत्रोपरिभागबद्धां
शिशुः परिव्राडिव योगमुद्राम् ॥ ३५ ॥
व्योमैकलक्ष्यां स्वदृशं निवर्त्य
भूमौ स कृत्यैर्बहुदुर्जनानाम् ।
खिन्नामलोकिष्ट दयाऽऽर्द्रचित्तो
मा देवि भैषीरिति दीनबन्धुः ॥ ३६ ॥
गत्वा स पीठं कुलदेवताया
विसित्य पूजाप्रतिमां गृहीत्वा ।
अपीपतद्दूरमपि स्वभावो
देवेषु मात्सर्यमितीव देवः ॥ ३७ ॥
मुहुर्यथेच्छं कृतमन्दहासै-
रङ्गास्ततः कल्पितमुग्धकृत्यैः ।
अव्यक्तवादैर्निजशैशवं सोऽ-
बभ्राजदेवं स्वमिवाऽऽद्ययोगी ॥ ३८ ॥

आह्लायिता तेन स जीवकेति
यदाऽस्फुरद् ज्ञानविवृत्तकण्ठः ।
तदाऽगमद्द्राक्पितुरङ्कदेशं
स्मित्वा प्रभुर्भक्तजनाऽनुकूलः ॥ ३९ ॥

प्रशस्तयोगाऽन्वितजातकस्य
बालस्य लोकोत्तरलक्षणस्य ।
मौहूर्तिकास्तस्य मुदा यथाऽर्थ-
मदीधरंस्तारकनामधेयम् ॥ ४० ॥

अवाप्तकामं सतताऽऽत्मतृप्त-
मन्नस्वरूपं विभुमप्रबुध्य ।
माता सुतं जानुचरं दिदेशं
तमाशिशत्पायसमुत्सवेन ॥ ४१ ॥

एकं पिबन्मातृपयोधरं स
विमर्दयन्कोमलपाणिनाऽन्यम् ।
निमीलिताऽक्षः सुखपारवश्या-
ददिद्युतन्निर्गुणमात्मतत्त्वम् ॥ ४२ ॥

हिताऽहितं सोऽविगणय्य नित्यं
साक्षिस्थितिं प्राप्य महानुभावः ।
आकाशवत्कलितरूप उर्वी-
देवाऽऽत्मजोऽभूद्भुवनैकवन्द्यः ॥ ४३ ॥

मुखे पदाऽङ्गुष्ठमसौ निधाय
स्वभावरम्याऽमलदीर्घदृष्टिः ।
विस्मृत्य तीक्ष्णक्षुधमर्दितोऽप्य-
क्रीडीन्महानन्दपयोधिमग्नः ॥ ४४ ॥

तदुन्नसं सुन्दरमन्दहासं
प्रसन्नमत्यन्तविशालनेत्रम् ।

चारुस्फुटाऽम्भोजसदृक्षवक्त्रं
सदाऽन्वबोभूयि सगोत्रदृग्भिः ॥ ४५ ॥
त्रातारमेवाऽर्दयति प्रकृत्या
कृतोपकारं न विचार्य मूढः ।
सन्दष्टमात्रश्चितचूचुकेनाऽ-
बोबुध्यभीक्ष्णं शिशुनेति लोकः ॥ ४६ ॥
यो वेदनिश्वासयुतः समस्तं
जानाति योयं न हि वेत्ति लोकः ।
अम्बापदं शक्यत एष वक्तुं
मातेति मग्ना प्रमदाऽर्णवेऽभूत् ॥ ४७ ॥
अम्बाऽन्यशब्दो नहि वाक्प्रपञ्चे
पुनः पुनः पञ्चजनेन भाण्यः ।
अम्बेत्युदित्वा महिमानमस्य
जनांस्तदाऽवीविदद‍र्भकोऽसौ ॥ ४८ ॥
वक्राऽलकाऽलङ्कृतफालभागं
बन्धून्विदित्वा कृतमन्दहासम् ।
प्रसन्तमुत्थातुममुं विलोक्य
मोदाऽर्णवे सा जननी न्यमाङ्क्षीत् ॥ ४९ ॥
प्रत्यग्रसान्द्राऽऽनतकैशिकेन
तमो रजस्त्वोष्ठतलेन सत्वम् ।
स्मितेन बालोऽनिशानिर्गुणोऽप्य-
धाल्लीलया लोकविडम्बनाय ॥ ५० ॥
स्यात्स्वापनिघ्नः सकलश्चराणां-
प्रायो बुभुक्षापरतन्त्रजीवः ।
असोषुपिष्टेत्युरसि स्वमातु-
रसावतन्द्रोऽपि पयांसि पीत्वा ॥ ५१ ॥

आयाहि पुत्रेति यदा स्वपित्रा
हूतस्तदासौ करतालकर्त्रा ।
अजङ्गमिष्टास्थिरनूपुराङ्घ्रि-
द्वयस्स्मितास्यः पितुरङ्कदेशम् ॥ ५२ ॥

इतस्ततः सुन्दरलोलदृष्टि-
रव्यक्तमुग्धामृतकण्ठनादः ।
जम्बालसंलग्नमनोहराङ्गो
द्विहायनी वालमदादधिष्ट ॥ ५३ ॥

भूत्वा यथेच्छं प्रकृतेरधीनो
नानाविधा ऐहिकमूढचेष्टाः ।
सन्तत्य दिव्यस्थितिमात्मनः सोऽ-
हासीद्विलासाय सदाचलोऽपि ॥ ५४ ॥

कुमारकः सम्यचिचत्स्वरूपं
दृशौ प्रगल्भोऽतितिरायदस्य ।
सदासमध्रायदसौ सगर्भ्या-
नशिश्रयत्स्वीयकुलं महिम्ना ॥ ५५ ॥

नखाग्रवज्रैरलकेन्द्रनीलै-
रोष्ठप्रवालेन सदन्ततारैः ।
पत्पश्चशाखाननेत्रपद्मा-
ल्येवाचकासीन्मणिपुष्पराशिः ॥ ५६ ॥

उरूदकुम्भं सहसादृणन्तं
नैवेद्यमन्नं झटिति ग्रसन्तम् ।
तमर्चितं विग्रहमुत्क्षिपन्त-
मक्षंस्त माता तनयं समीक्ष्य ॥ ५७ ॥

अमस्रदत्स्वीयमनस्सुमाद-
प्यपप्रथत्सत्वगुणं पयोधेः ।

अचक्रशब्दैजतमस्सशून्या-
ददद्रढद्धैर्यमगप्रकाण्डात् ॥ ५८ ॥

मालिनी ।

नवरसरुचिवेदी सर्वभूतानुवादी
ललितचरणचारी साध्वलङ्कारधारी ।
परवशसुखयोगश्चित्रसङ्कल्पभोगः
कविरिव स कुमारः प्रस्तुतोऽभूदुदारः ॥ ५९ ॥

# तारके द्वितीयः सर्गः ।

## लब्धधिकारः ।

मालिनी ।

तदुपनयनकर्माऽथाकरोत्तस्य तातः
सकलनिगमधर्मस्थापनायानवद्यम् ।
परवशमुरुकष्टं देव आयुर्नराणां
स पृथुक इति भिक्षापात्रमीशोऽप्यधत्त ॥ १ ॥
करयुगल उदग्रं पर्णदण्डं वलग्ने
स्फुरदभिनवमौञ्जीबन्धनं ब्रह्मसूत्रम् ।
हृदि शिरसि शिखानां पञ्चकं दर्शनीयं
वटुरभरत कट्यां पीतकौपीनमेषः ॥ २ ॥
निजगुरुपदभक्तं सर्वविद्यानुरक्तं
सकलसुजनमित्रं मञ्जुलश्वेतगात्रम् ।
अतुलितकुलदीपं वीक्ष्य विद्वत्कलापं
मुदमवहदमन्दं प्रत्यहं बन्धुवृन्दम् ॥ ३ ॥
अपि परमरहस्यं ज्ञानवित्तं गुरुभ्योऽ-
द्भुतकरबहुमेधोनैपुणेनोपलभ्य ।
मृदुलमधुररीत्यातोषयत्पण्डितौघं
विनयमलभतासौ स्वीयविद्यानुकूलम् ॥ ४ ॥
अतुलललितरूपः सर्ववेदः प्रशान्तः
सकलजनसमानः सर्वतन्त्रःस्वतन्त्रः ।
विजितसमवयस्को विद्यया सद्यशस्कोऽ-
भ्यलपत परदेशालोकनं तत्कुमारः ॥ ५ ॥

सहजवशमुपेतो लीलया गूढतेजा
अशनवसनसक्तो बाल्यचापल्ययुक्तः ।
तत इत इव देवो बालकोऽजोऽपि गच्छ-
न्विबुधनगरनाम प्राविशत्पत्तनं सः ॥ ६ ॥

मधुरवनपरीता स्वादुपानीयपूता
सकलधनसमृद्धा गन्धवातप्रसिद्धा ।
पृथुलभवनरम्या साधुवृन्दानुगम्या
व्यलसदुरुमदेभा सा पुरी दिव्यशोभा ॥ ७ ॥

ललितकुलसतीभिः साधुशीलान्विताभि-
श्चतुरपुरुपवर्यैः साधितामोघकार्यैः ।
अमलपृथुनिवासैः सर्वसम्पद्विलासै-
र्नगरवरमराजत्कुम्भिनीभूपणं तत् ॥ ८ ॥

प्रतिहतकुवदानां गन्ध आत्मम्भरीणां
खलचपलमुसल्यक्रूरकर्णेजपानाम् ।
जडशठकृपणानामेडमूकाग्रराणां
सकृदपि नहि तत्रासीन्निरस्ताम्थिराणाम् ॥ ९ ॥

सततशमितभावः प्राभवद्भूमिदेवः
पृथुमहदनुरक्तः साधुमूर्धाभिषिक्तः ।
सकलविभवढ्यः पत्तनवाचि वैश्यः
परहितगुणभद्रः सर्वथा तत्र शूद्रः ॥ १० ॥

अनुपदमपि वर्णा कथ्यमानं स वृद्धै-
श्चरितमिति पुराणं यन्नगर्याः प्रबुध्य ।
चतुरमतिरपश्यन्मानवानां वितानं
सकलकलुपनिघ्नं तत्पुरं कण्ठदघ्नम् ॥ ११ ॥

परपरिहृतवित्तं सायथातथ्यवृत्तं
भुवनविदितशिष्टाचारदूरं समन्तात् ।

वपुरिव गतजीवं पत्तनं जीर्णपुण्यं
निपुणतरमतिः सोऽतर्कयद्विप्र इत्थम् ॥ १२ ॥
अनयदिह कुमार्गं धर्मशून्याधिकारी
सकलजनसमूहं वृत्ततः क्षिप्तमद्य ।
अहमखिलनगर्यामाविलायामपश्यं
निखिलमनिलमम्भो रोगमूलं प्रगाढम् ॥ १३ ॥
अभिनववयसा प्रक्षीबितो न्यायकर्ता
गुरुरुरुधनलुब्धोऽश्रद्दधानोऽस्य शिष्यः ।
पिशुन इह गृहस्थोऽपत्रपाऽलक्ष्यत स्त्री
नरपतिरविवेकी वञ्चकस्तस्य मन्त्री ॥ १४ ॥
नहि कुलगुणविद्याः प्राभवन्गौरवाय
द्रविणबलकुतन्त्रासत्यवाक्यैर्विनेह ।
अनवरतमसेवन्ताग्रजा वेदबाह्या-
न्स्वसुखमभिलपन्तः पौरुषं त्यक्तवन्तः ॥ १५ ॥
अकुरुत कुलबाह्यः स्वैरिणीवञ्चको दु-
ष्कृततरतमत उच्चैः पत्तने शून्यवादम् ।
नटविटभटतीर्थध्वाङ्क्षकापालिकैः प्रा-
णददवगतदेवागारमाचारहीनैः ॥ १६ ॥
जननुतकुलतोऽहं जातवानित्यहंयु-
र्विबुधसदसि जल्पन्नुत्तमात्मीयगोत्रम् ।
अभवदिह स गेहेशूर आजन्मदुष्टोऽ-
नवरतपरनारीलम्पटः सम्पदन्धः ॥ १७ ॥
अहरहरिह मेषान्कुक्कुटान्योधयित्वा
सततमधिकपूज्यान्दूषयित्वा मदेन ।
प्रतिदिनमुपदंशैरेप मद्यं निपीया-
गमयदवधिमात्मायुर्यथाजात इत्थम् ॥ १८ ॥

क्वचिदरमत सोऽयं जालिकन्याधनीचैः
क्वचिदलभत हेयं वेषमन्यालयेषु ।
क्वचिदवमतलज्जोऽस्वाङ्गिरीशानुकूलं
क्वचिदनुवदरिं किं वीरसूस्तस्य माता ॥ १९ ॥

रुचिरतरुणदासीमेलको वाजिमेधः
परयुवतिमुखाम्भोजेक्षणं राजसूयम् ।
फलमिह निजसौख्यं जीवितेऽनल्पमेव
प्रतिदिनमिति खट्वारूढ एष व्यजानात् ॥ २० ॥

ऋणमिह पिशुनेनादीयत स्वार्थवृद्ध्यै
परिजनभृतकेभ्योऽक्रीयताल्पोऽपि मत्स्यः ।
सुममधुफलशाकं देवसम्बन्धि सर्वं
बहुलकुवदपोष्ट्रा किंपचानेन तेन ॥ २१ ॥

श्रुतिसमुदितकन्यादानकालेऽपि मद्यं
तरसमिह गवां स प्राशयद्वेदबाह्यान् ।
तदपरिमितवस्त्वग्रस्य तद्विण्नृपालैः
प्रतिदिनमुरुधूर्तोद्योगिभिर्मन्त्रिमुख्यैः ॥ २२ ॥

श्रुतिरिपुकुलजाय स्वीयसम्पत्कुमारी-
मनुचितकरखिन्नां निर्दयः सोऽर्पयित्वा ।
अयमनिशमविन्दज्जीवनं तस्य हेतो-
रनृजुमतिरपि स्वश्मश्रुयुग्मं विधून्वन् ॥ २३ ॥

विधिनियमितकर्माक्षिप्य शश्वच्छ्ववृत्त्या
क्षणिकधनमुपार्ज्य म्लिष्टमेवानुलप्य ।
अगमयदवसानं सोऽन्यजातीयवेषैः
प्रकटकपटशीलो जीवितं ब्रह्मबन्धुः ॥ २४ ॥

बहुलधनयुतश्चेद्दीर्घनामाभिधाय
स्वकुलनियतकर्मस्तोममाराद्विधूय ।

सकलपललभोजी सन्ततं मद्यपाय्य-
न्वसरदवनिदेवोऽसौ दिवाकीर्तिवृत्तम् ॥ २५ ॥
किमपि स नहि पश्यञ्जीवनोपायमन्यं
बहुयजनमिषेणार्थं जडान्भिक्षमाणः ।
प्रतिदिनमिह दारान्भूषणैर्भूषयित्वा-
दयमनयमजामालम्भयद्यायजूकः ॥ २६ ॥
उरुतरमिह दत्तं पादपूजाधनं चे-
दयमकुरुत दासीपुत्रगेहेऽपि भिक्षाम् ।
अनयमखिलबन्धून्स्वान्परिव्राडपुष्य-
त्सकलमतनियन्ताश्रान्तपीठाधिगन्ता ॥ २७ ॥
बहुधनपरधूर्तैः पूरिते धर्मगेहे
मुहुरिह विरचय्यानर्थकं कूटसाक्ष्यम् ।
अविदितनिगमार्थोऽजस्रमेषोऽग्रजातिः
समचरदुरुमूल्यक्रीतवादाधिकारः ॥ २८ ॥
सकलनिगमबाह्यं कर्षकं द्यूतकारं
भृतिभुजमिह कन्याविक्रयं सार्थवाहम् ।
द्विजकुलउरुवृद्ध्या जीवमाद्यूनमैक्षे
प्रकटकपटवेषं शिश्विदानं भ्रुकुंसम् ॥ २९ ॥
उदवहदिह वृद्धो निर्घृणः क्षीरकण्ठा-
मवृणुत कुलबाह्यः सम्पदन्धः कुलीनाम् ।
हतमतिरभिशस्तः प्राव्रजद्रूढभोगो
बहुलधनरतिर्धिग्ब्राह्मणं नाम शिष्टम् ॥ ३० ॥
सकलनिगमपुञ्जस्यायमस्यां मृषार्थं
पुरिविकृतवचोभिर्बोधितं बुध्यमानः ।
अवगणितधरित्रीदेवतो हीनवर्णोऽ-
प्रथयदमितगर्वं कद्वदः सम्पदन्धः ॥ ३१ ॥

श्रुतिनिगदितमार्गं नाजहान्निर्विशेषं
दृढमिह परपद्यां नह्यवालम्बतायम् ।
अमनुत बहुदुःखं नो सुखं मानवोऽद्या-
पकृतमुपकृतं दुर्वृत्त उन्मत्तचित्तः ॥ ३२ ॥

स जगदुपचिकीर्षुस्तर्कयन्नित्युदारः
क्वचिदपि परिगच्छन्मन्दमालोलदृष्टिः ।
प्रमदवनसमीपे गन्धवातेन हृष्टो
घनमधुररवेणागायदित्थं महात्मा ॥ ३३ ॥

जननि तव जनोऽतिक्रम्य वेदोपदेशं
प्रतिदिनमचरत्स्वच्छन्दहीनोहताशः ।
इति मुहुरभवस्त्वं सुष्ठु रोरुद्यमाना-
द्विजनिनदविलापैः सन्ध्ययोः कर्मभूमे ॥ ३४ ॥

अनिशमिह पुरा मे क्षत्रियोऽधत्त नाम
स्फुटतरमधुना तत्सर्ववर्णोऽप्यगृह्णात् ।
इति शिखरतरूणामाशुगेन श्वसित्वा
क्षितिभृदयममुञ्चन्निर्झराश्रुप्रवाहम् ॥ ३५ ॥

रुचिरमुरुगभीरार्थान्वितं तन्निशम्य
स्तनितमिव दविष्ठश्राव्यमक्लिष्टगीतम् ।
उपवनतरुकेलीलोलभूपालपुत्र-
स्तमविविदिपदार्यं साधु गायन्तमुच्चैः ॥ ३६ ॥

विकसितलपनेनानन्तरं जाङ्घिकेन
क्षितिपसुतभटेन प्रार्थ्यमानस्स विद्वान् ।
ललितधवलवर्णः सच्चिदानन्दपूर्णः
समचरद्द्विव मन्दं मत्तमातङ्गपोतः ॥ ३७ ॥

स उपवनविशेषानद्भुतान्दर्शनीयान्
स्मितललितमुखाब्जो लक्षयन्सत्कवीन्द्रः ।

अभिनवबहुराजत्कल्पनामूहमानो-
ऽतरदवगतमार्गं तोषितप्राणिवर्गम् ॥ ३८ ॥
विनयनमितमूर्धद्वार्स्थितानीक्षमाणः
प्रकटितसचिवाद्यैरञ्जसा वन्द्यमानः ।
अनुपदमपि धन्यं स्वं मुदा मन्यमानो
नृपतिसुतचकोरायात्र सोऽपूर्णचन्द्रत् ॥ ३९ ॥
समतरुणवयस्कं स्वीयरूपानुकारं
सरसिजसदृशाक्षं सन्नुतं राजपुत्रम् ।
सविनयनतशीर्षं सोमबिम्बास्यमार्यं
सपदि तमवलोक्यासावसुख्यद्द्विजेन्द्रः ॥ ४० ॥
अवनिपतिकुमारोधारुणीदेवमौलिं
सहृदयमपि पुंसां मोहनाकारयुक्तम् ।
तमपरिमिततेजश्शालिनं सर्ववेदं
सकलगुणनिधिं सोऽवन्दतावाप्तकामम् ॥ ४१ ॥
द्रुतलयपरिमेयं गीतमुद्बुद्धतारं
बहुगुणललितं सङ्गाय वाग्गेयकारः ।
अनुपमकविराजोऽवक्सदाशीर्वचांसि
क्षितिपतिवरसूनोस्सप्रहृष्टो स्मितास्यः ॥ ४२ ॥
परिजन उभयोरन्योन्यसख्यं चिकीर्षो-
र्द्विजनृपसुतयोर्द्रागिङ्गितं बोबुधित्वा ।
मणिवलयवदेषोऽद्यैतयोरिद्धयोगोऽ-
भवदिति स समस्तो निर्भरानन्दमाप्नोत् ॥ ४३ ॥
तरुणपुरुषरत्नं सर्वविद्यासनाथं
क्षितिपतितनयस्स्वच्छन्दशीलं विदित्वा ।
सपदि स निजपित्रे दर्शयिष्यन्विनीतं
यवनहयमसावारोहयद्भूमिदेवम् ॥ ४४ ॥

गगनमणिरिव स्वच्छन्दभावोऽतिरस्य-
त्तिमिरमिव महानास्तिक्यमौरस्यदत्र ।
अकलयदिव तेजो ज्योतिरिङ्गोऽल्पविद्वा-
न्समचरदिव घूकः प्राङ्मतस्थापकारिः ॥ ४५ ॥

उडुगण इव शिष्टाचारवारो व्यराज-
त्तुहिनकिरणशोभेवाभ्युदैद्दैवभक्तिः ।
तत इव समफुल्लत्कैरवश्रीस्समन्ता-
दुरुतरनिरतिस्स्वच्छन्दजीवे जनस्य ॥ ४६ ॥

चतुरतरधरित्रीदेवतावाजिराजं
परिचितमिव धृत्वा लीलयासौ खलीनम् ।
सह नृपतिसुतेनास्कन्दिताक्लिष्टगत्या-
गमयदनरिबाधं सँल्लपन्राजसौधम् ॥ ४७ ॥

हयवरमथ हित्वा स्वस्तिकं सोऽतिरिच्या-
द्भुतकरबहुदीपैर्दीप्यमानो महात्मा ।
नृपतिसुतगृहीतस्वीयहस्तो मुदा प्रा-
विशदधिपगृहानारुह्य सोपानपालिम् ॥ ४८ ॥

सवयसमनिरुद्धं रूपवन्तं कुलीनं
कृतिनमवनिदेवं रञ्जकं लब्धवर्णम् ।
गुरुमिह भजनीयं मे पितोपादिशत्प्रा-
गभजमिति तथैवैत्संमदं राजपुत्रः ॥ ४९ ॥

सपदि स कृतकृत्यं पण्डितं भोजयित्वा
परिपदमथ नीत्वाकुण्ठितं राजकीयाम् ।
पितरमधिकविद्याकौतुकं स्वं वदान्यं
तमवनिपतिपुत्रोऽदर्शयद्भूमिदेवम् ॥ ५० ॥

द्विजतनयमुदारं सर्वविद्यावतारं
धरणिपतिवरेण्योऽश्मश्रुजातं विलोक्य ।

निटलघटितहस्तद्वन्द्व आर्यं प्रणम्या-
शुतममितमुदोपावेशयद्रत्नपीठम् ॥ ५१ ॥
रुचिरमुदमनायन्तार्यमालोक्य केचि-
त्सपदि तमगुरूयन्विस्मयं प्राप्य केचित् ।
अपरिमितमुदोपाश्लोकयन्ताशु केचि-
द्विजमणिमसुखायन्ताभिवन्द्यात्र केचित् ॥ ५२ ॥
अभिनवरुचिरोहा चित्रसत्काव्यसृष्टे-
रपि सकलजडानां मोहकृद्वानशक्तेः ।
प्रमदबहुलपारावारमध्ये न्यमज्ज-
न्नखिलविबुधवन्द्यस्यास्य राण्मुख्यसभ्याः ॥ ५३ ॥
कवितिलकमुपास्याथाऽऽच्छगत्यास्य सख्यं
हितकरमभिवाद्यासौ समस्तागमज्ञम् ।
स्वसुतमिव विभूष्य क्षोणिभर्ता स्वयं तं
सुखमुचितनिवासेऽवासयद्भूमिदेवम् ॥ ५४ ॥
उदभवदिव कल्यं प्रेमवेदाधिकारे-
ऽरटदिव बलिपुष्टोऽसम्प्रदायानुवादी ।
अरुणरुचिरिव स्वच्छन्दजीवे चिदासी-
दरजदिव रथाङ्गस्स्वीयदेशाभिमानी ॥ ५५ ॥
सततमनुचरन्तौ सर्वशास्त्रप्रमाणं
मुहुरभिजनयोगक्षेममालोचयन्तौ ।
द्विजसुतनृपपुत्रावध्यतिष्ठासतां तौ
बहुनिपुणतयैकग्रीवमुद्दिष्टकार्यम् ॥ ५६ ॥
स्वयमचिरमुपज्ञावैभवेनोपलभ्या-
श्रितचतुरगुरूणां बोधनेन प्रबुध्य ।
प्रथितसकलविद्याचारभाषाजगत्या-
स्समजिगमिषतां तौ मन्दिरं स्वाधिपानाम् ॥ ५७ ॥

जगदधिपतिमन्वग्भूय गोपायितुं स्वे
बहुविदितयुवानौ प्रार्थ्य तौ देवदेवम् ।
न सुखमिति विदित्वा स्वैरितामन्तरेण
प्रथितदृढमनस्कावाप्नुतां धूमनौकाम् ॥ ५८ ॥

सांयात्रिकमातरेणाप्रीयेतां नाविकोत्तमम् ।
प्रीत्वा साप्तपदीनेन पोतवाहं सुहृद्वरौ ॥ ५९ ॥

# तारके तृतीयः सर्गः ।

## लिडधिकारः ।

अनुष्टुप् ।

धुन्वन्तौ देहसौख्याभिमानं धूममिव द्विजौ ।
श्रितांस्तारयितुं कोलां चक्रतुस्त्वौ भवाम्बुधेः ॥ १ ॥
चक्रपत्रे विधुन्वानश्चलदुच्चूडचूडवान् ।
प्लवः प्रबोधयामास ध्वनन्कुक्कुटवज्जनान् ॥ २ ॥
वातप्रकोपं शमयन्दीपयन्जठरानलम् ।
नौ तनोरूर्जयन्धातून्वैद्यामास स नाविकैः ॥ ३ ॥
अन्तर्दधौ मही दूरे प्रज्ञान इव संसृतिः ।
पयोधियाने दिक्कालभेद एव न दिद्युते ॥ ४ ॥
क्षयवृद्धी आशयस्य जन्मभूम्यन्यराष्ट्रयोः ।
क्रमशोऽनुबभूवाते जनैर्मातृकलत्रवत् ॥ ५ ॥
भेदं भेदं कूपकेन दिवमभ्याधरातलम् ।
खानं खानमकूपारं दारं दारं जगाम नौः ॥ ६ ॥
दिक्सूचियन्त्रमनसा कर्णधारात्मनान्विता ।
सर्वभूतमयी नौकेवाबभौ जलदेवता ॥ ७ ॥
उपरिष्टात्पार्श्वतोऽधो दर्पणीभूतवारिधेः ।
दर्शनाद्दिक्षु वियतस्सान्तराल इवाट नौः ॥ ८ ॥
उत्तानेऽब्धिस्सकालुष्यास्थिरताडम्बरान्वितः ।
अल्पज्ञ इव गम्भीरे बभूवाच्छस्सुधीरिव ॥ ९ ॥
अन्वग्भावं तरिं निन्ये सत्पथं सखिवन्मरुत् ।
भाग्येनापुश्चिरारोग्यं सर्वे नौयात्रिका अपि ॥ १० ॥
नूलकालमनुष्याणां समावेशस्सविस्मयैः ।
अहोरात्रं विदांचक्रे धूमनौकाप्रयातृभिः ॥ ११ ॥.

अन्तस्समुद्रे भूमीध्रास्तस्थुर्नौकापकारिणः ।
सज्जनोपद्रवकरा राक्षस इव सूचकाः ॥ १२ ॥
डोलायामिव वीच्यां स्त्री डोलयामास कच्छपी ।
विहङ्गम इवोलूपी संडिड्ये गुणवृक्षकम् ॥ १३ ॥
बहुगम्भीरमध्येऽब्धेरासांचक्रे तिमिङ्गिलः ।
जीवनस्य क्षोभकारी लोभो राज्ञो यथा हृदि ॥ १४ ॥
चकासामास सीतेव तोयरेखा तरीकृता ।
पोताधानोद्गमो बीजवापेन सदृशो बभौ ॥ १५ ॥
जीवनक्षयसन्देहो बडिशानायवेदना ।
कुवेणीबन्धनं नात्र झषैरनुबभूविरे ॥ १६ ॥
कालः परस्परालापैर्भूतभाव्यर्थचिन्तनैः ।
जनैर्विचिक्षिपेश्शीतपित्रतायां समुत्सुकैः ॥ १७ ॥
उदीच्यां द्योतनं भानोरवाच्यामपवारणम् ।
ईक्षामासे तदा नौका यात्रिकैर्दिग्भ्रमान्वितैः ॥ १८ ॥
सर्पिर्निधायं हित्वा स पानीयं क्लिष्टमानसः ।
तदानीं बुभुजे भिस्सां यावद्द्वेदंतरी जनः ॥ १९ ॥
अरुच्यं लवणक्षारं जघास सतृणं जनः ।
स्वदेहधारणायान्नबुभुक्षुः क्लिशितो भृशम् ॥ २० ॥
भयङ्करस्तदा जज्ञे प्रतिकूलः प्रभञ्जनः ।
अभीक्ष्णमब्धिस्संक्षुभ्नन्क्षोभयामास तां तरिम् ॥ २१ ॥
प्रवेशयामास ततो गर्भे निर्विण्णयात्रिकान् ।
तर्या वितर्दिजठरं नाविकः कुक्कुटानिव ॥ २२ ॥
वायुसंक्षुभिताम्भोधिर्यदा शान्तिमुपेयिवान् ।
निष्खेदेव तदा नौका रेजे स्वाधीनभर्तृका ॥ २३ ॥
दरिद्रैरिव सम्पत्ती रुग्युतैरिव वार्तता ।
अनुबोभूयाम्बभूवे यात्रिकैरभयस्थितिः ॥ २४ ॥

अथैकस्मिन्सुप्रभाते मित्रेण सह तारकः ।
अवरोहन्धूमतर्या अधितष्ठावुरुप्लवम् ॥ २५ ॥
यातायातोडुपश्रेणी नौका तीरान्तराम्बुधेः ।
निम्नोन्नततरङ्गेषु दृश्यादृश्यस्थितिं ययौ ॥ २६ ॥
जन्मस्थाने स्वाधिपानां विहर्तुमुपचक्रमे ।
मित्रद्वयं महोत्साहफुल्लाननसरोरुहम् ॥ २७ ॥
चन्द्रद्वीपे नित्यभद्रां स्वतन्त्रप्रभुपालिताम् ।
पुरीं चन्द्रमतीनाम्नीं तावुभावधिजग्मतुः ॥ २८ ॥
प्रोवाह पृथुलावाच्यां चन्द्रकान्तेति विश्रुता ।
चित्रसेतुर्नित्यनाव्या बहुजीवनदा नदी ॥ २९ ॥
पञ्चयोजनविस्तीर्णा शतलक्षजनावृता ।
भूगोले बहुना किं सा पुरी पुरमतल्लिका ॥ ३० ॥
चन्द्रिकाधवलच्छायास्तत्रत्या रेजिरे जनाः ।
सर्वसर्वंसहाचक्रप्रतिपालनदीक्षिताः ॥ ३१ ॥
अन्योन्यमैत्रीं कुर्वन्तस्संजानन्तो यथायथम् ।
प्रियप्रियेण यच्छन्तः किरन्तश्शुक्लशुक्लभाम् ॥ ३२ ॥
विद्यया समयाकृत्य प्रियाकृत्य मुहुर्गुरून् ।
आत्मनो राजसात्कृत्वा दुःखाकृत्य विरोधिनः ॥ ३३ ॥
चारित्रतोऽतिगृह्णन्तो व्यथमाना न वृत्ततः ।
भवन्तो दीनतोऽजस्रं जीवन्तो देवतःप्रति ॥ ३४ ॥
एकतानास्सांयुगीना वाग्मिनो हृदयालवः ।
क्षेमङ्करा महोत्साहा उरस्वन्तो यशस्विनः ॥ ३५ ॥
समानपङ्क्तिभोक्तारस्समवर्णविभूषिताः ।
सामान्यभाषावक्तारस्समानाचारवर्तिनः ॥ ३६ ॥
वयःपरिणयं स्त्रीणां विद्याभ्यासं स्वतन्त्रताम् ।
प्रापयन्तोऽवतन्वन्तस्स्वराज्यविहितोद्यमान् ॥ ३७ ॥

सामाजिका आस्तिकास्सत्कुलीना धार्मिका बुधाः ।
शाकाहारा वावदूकाः कृतिनः पुरुषोत्तमाः ॥ ३८ ॥
तत्रत्यिका बभूव स्त्री वीरमाता सुलक्षणा ।
गृहकार्यपरा प्राज्ञी बुधमान्या पतिव्रता ॥ ३९ ॥
वीथीर्विशाला अमला जलयन्त्रपरिष्कृताः ।
निषद्यास्तौ ददृशतुस्सर्ववस्तुसमन्विताः ॥ ४० ॥
सौधास्समुन्नतारम्या अद्भुतारामदीर्घिकाः ।
नानाविधाश्शिल्पशालास्ताभ्यामीक्षाम्बभूविरे ॥ ४१ ॥
आकाशयानानि धूमशकटांस्तौ मनोजवान् ।
तन्त्रीवार्तावहांस्तत्र लुलोकाते महाद्भुतान् ॥ ४२ ॥
ततः पौरान्वशीकर्तुं गेयं तद्देशभाषया ।
गायन्तौ तावुभौ तत्र प्रतोलीषु विजह्रतुः ॥ ४३ ॥
समुन्नतौ तावाजानुबाहू सर्वाङ्गसुन्दरौ ।
बहुतेजस्विनौ दृष्ट्वा मुमोह नगरीजनः ॥ ४४ ॥
तत्सौन्दर्यं तदौन्नत्यं तत्तेजस्तत्पराक्रमः ।
तत्तारुण्यं तत्प्रतिभा मुमोष जनमानसम् ॥ ४५ ॥
द्वितन्त्रगौलक्षणिकमीमांसकसवार्तिकान् ।
पराजिग्याते धार्मिकवैयाकरणतार्किकान् ॥ ४६ ॥
लोकैकवीरौ तौ सर्वतन्त्रौ स्वातन्त्र्यशालिनौ ।
सिंहसंहननौ द्रष्टुमियेष नगरीश्वरः ॥ ४७ ॥
हैयङ्गवीननिष्ठानकूर्चिकामस्तुसंयुतम् ।
स्नातानुलिप्तौ मृष्टान्नं बुभुजातेऽथ सात्विकम् ॥ ४८ ॥
प्रसाधितौ तौ रोचिष्णू वेषेण समयोचितौ ।
विशेषकभ्रमरकस्फीतफालौ रराजतुः ॥ ४९ ॥
महाधननिशारामपदीनांशुकसुन्दरौ ।
ग्रैवेयकोर्मिकादेवच्छन्दकुण्डलभासुरौ ॥ ५० ॥

तौ चार्वनुपदीनाविराजच्चरणसारसौ ।
स्वच्छक्षौमोष्णीषरम्यौ धृतकालोचितायुधौ ॥ ५१ ॥
पारसीकौ वयस्थौ तावारुह्य द्राङ्मनस्विनौ ।
जग्मतू राजसदनं युवानावकुतोभयौ ॥ ५२ ॥
सायाहनि सुपन्थानं गच्छन्तौ दर्शकैः सह ।
संशोधितहिमानीकं लक्षयामासतुः सभाम् ॥ ५३ ॥
अध्यासीनं भद्रपीठं पृच्छन्तं मन्त्रिणः कृतीः ।
प्रकृत्या सुन्दरं वीक्षांचक्राते चक्रवर्तिनम् ॥ ५४ ॥
आलोक्य सार्वभौमस्तौ प्रत्युत्थानपुरस्सरम् ।
व्यूढोरस्कौ ततस्ताभ्यां ददौ समुचितासने ॥ ५५ ॥
पूर्णेन्दुबिम्बसदृशी पश्यन्तोऽपि मुहुस्तयोः ।
दर्शनीयानने सभ्या नापुस्तृप्तिं सविस्मयाः ॥ ५६ ॥
उररीकृत्योपहारं नमस्कारपुरस्कृतम् ।
तयोरुदन्तं पप्रच्छ सार्वभौमः सविस्मयः ॥ ५७ ॥

उपजातिः ।

महाभिरूपौ विनयान्वितौ तौ
वदावदौ भारतवर्षदीपौ ।
प्रचक्रमाते गदितुं स्ववार्तां
धीरावुदारौ जगदेकवीरौ ॥ ५८ ॥

# तारके चतुर्थः सर्गः ।

स्रग्धरा ।

सृष्ट्यादावाविरासीत्तरुविमृगनृणां संश्रयो यो हिमाद्रि-
वेदद्रष्टृर्षिसेव्या विलसति तदवाक्पार्श्वतः कर्मभूमिः ।
साद्याधीश त्वदीयाखिलधनकलिता नावभूत्तत्र जन्म
ब्रह्मक्षत्रौ स्व आवां तव यदि करुणा स्याद्भवेवप्रतीतौ ॥ १

वसन्ततिलका ।

धर्मे सदान्ववसितेन भवत्खगेन
देशेऽद्य नः कुजनदण्डतमोनिरस्तम् ।
सच्चक्रसम्मद उरीकृत आततायि
घूकोरुभीकररवः सुतरां विलुप्तः ॥ २ ॥

पुष्पिताग्रा ।

सकलधरणिपालका अनु त्वां
तव न नभोमणिरस्तमेति राज्ये ।
त्वयि महिमवति प्रभो कवीन्द्रा-
भिहितजडोऽपि विशारदायतेऽद्य ॥ ३ ॥

अनुष्टुप् ।

सिंहलाब्धौ मौक्तिकन्ति तुहिनन्ति हिमालये ।
वज्रन्ति गौतमीतीरे यशांस्यद्य विभो तव ॥ ४ ॥

द्रुतविलम्बितम् ।

न नृबलिः क्वचिदप्युरुभीकरः
प्रहणनं न चितौ कुलयोषिताम् ।
भरतवर्षतले नरविक्रयो
नहि कृपा निलये त्वयि शासति ॥ ५ ॥

भुजङ्गप्रयातम् ।

पशूनां विना हिंसयैवातिदूरं
नृवार्ताचितान्यङ्गिणो द्राङ्नयन्ति ।
मरुर्वप्रतीहापि राज्ये त्वदीये
धियाऽसाधनीया क्रिया नास्ति लोके ॥ ६ ॥

स्वागता ।

निम्नगाः प्रतिहताः कठिनाल्या
जीवनं ददति दूरजनाय ।
कृत्रिमाल्पनदविस्तृतहस्ताः
पीडयैव ददते वसु लुब्धाः ॥ ७ ॥

शार्दूलविक्रीडितम् ।

षट्कर्मावगता द्विजातय इलागुप्त्युद्यताः क्षत्रिया
गोरक्षाकृषिविक्रयक्रयपरा वैश्याः सदाराधकाः ।
शूद्रा वर्णचतुष्टयप्रकटिता ये भारतीया जना-
स्ते दुष्टाधिपदूषिता अपि पुनश्शुद्धिं लभन्ते त्वया ॥ ८ ॥

भुजङ्गप्रयातम् ।

कुलस्त्रीं हरन्भूमिदेवं प्रणिन्द-
न्द्दणन्देवगेहं दहन्पत्तनानि ।
शकाधीश्वरो भारतैश्वर्यमाप-
ज्जनो नान्यदुःखं विनैति स्वसौख्यम् ॥ ९ ॥

पृथ्वी ।

यथेष्टमतवृत्तयस्तव जना भजन्ते मुदं
समक्षमधुनाभयाः प्रतिवदन्ति धर्मं प्रभुम् ।
सुवर्णमपि मुष्यते न बहुविच्युतं चत्वरे
सदा नहि सुखायते कथमभिज्ञराज्ये जनः ॥ १० ॥

शिखरिणी ।

अमात्याः सर्वज्ञाः पिपुरति सदा कर्मसचिवा
महामात्रा धीराश्चतुरमनसोऽमी प्रणिधयः ।

पुरोधोऽध्यक्षाः सन्नुतपृथुलवैदग्ध्यकलिता
यशोभिः साम्राज्यं तव सकलभूपालकमणे ॥ ११ ॥

हरिणी ।

भृशमभिजनोऽस्माकं यस्ते कृपाप्रतिपालितो
बहुसुखधनं लब्ध्वा त्वां सोऽर्चति प्रियपुत्रवत् ।
इह सवयसौ धन्यावावां त्वदञ्चितसम्मुखं
द्रुतमुपगतावित्थं स्वामी प्रमाणमितः परम् ॥ १२ ॥

मन्दाक्रान्ता ।

श्रुत्वा वाचो नृपतिरमुयोर्भावगूढा मनोज्ञा
यूनोर्बुद्धिं भुवनविदितां विस्मितः सन्परीक्ष्य ।
देवत्रामू इति स गणयन्सैन्यपत्यं प्रदातुं
मेनेऽमूभ्यामनघचरिता माननीया भवन्ति ॥ १३ ॥

उपस्थिता ।

आत्मन्यधिकावितिमन्यमान-
स्ताभ्यां प्रसितोऽनघचक्रवर्ती ।
शश्वन्निपुणः सभवंस्तयोस्ते-
मित्रे सदसीत्थमुवाच साधुः ॥ १४ ॥

गीतिः ।

सुलभौ देवाविव मे
संप्राप्तौ सर्वथेह मयि साधू ।
महतां विदेशगमनं
भवति नितान्तं परोपकाराय ॥ १५ ॥

मत्ता ।

सञ्जातौ मे महति भवाद्द-
ग्धीरौ धीरावखिलगुणाढ्यौ ।
मच्चित्तं गर्वति मम सेव्यौ
प्राप्तावाप्ताविति जनवन्द्यौ ॥ १६ ॥

भुजङ्गप्रयातम् ।

मुदाद्यप्रभृत्यस्म्यहं युष्मदीयो
युवामर्हथश्चक्रवर्तित्वमाप्तुम् ।
भवन्तौ ममातीव मित्रे भवेता-
मताप्सीदमू इत्यसौ सार्वभौमः ॥ १७ ॥

स्रग्धरा ।

ताभ्यां कारिष्यमाणं स्वविषयसुभगम्भावुकं कर्म सभ्य-
स्तोमोऽगच्छद्दिदृक्षुर्निजसदनमिलापालकस्यापवादात् ।
प्रासादं तौ वयस्यौ पृथुमधिवसतः सार्चितौ जागरूकौ
स्वाधीनं स्यान्नराणामखिलमपि जगद्भाग्यसंयोजितानाम् ॥

पञ्चचामरः ।

कुमारिकाः प्रियौ कुलाङ्गनाः सहोदरौ सुहृ-
द्वरौ युवान इत्यतीव पुत्रकौ जरज्जनाः ।
तदाह्वयन्त तावुभावशेषलोकसम्मतौ
द्विषन्ति के महीतले नितान्तसद्गुणान्वितान् ॥ १९ ॥

चन्द्रलेखा ।

मासोऽयासीत्तयोरत्रैव क्षणो राजकीयो-
द्योगैः सर्वप्रजानां वश्यक्रियाकल्पनाभिः ।
श्रुत्वा राजानुजो दुर्हृद्भिर्निबद्धो हठात्ता-
वित्यापद्भान्धवावीदृक्सार्वभौमं स वक्तः ॥ २० ॥

हरिणप्लुतम् ।

आश्चर्यं जगतीपते तव दुर्हृदां किमु पेषणं
त्वत्केऽत्र प्रिययुग्म ईदृगरिंदमे सति जीवति ।
माशोचीरचिरेण तेऽश्वितसोदरं जितशात्रवं
द्रष्टासि प्रमदेन नौ रिपुमर्दनेऽद्य नियोजय ॥ २१ ॥

चन्द्रलेखा ।

शिष्टिम्भूपस्य लब्ध्वा भूदेवताक्षत्रवीरा-
वाचार्याणां स्मरन्तौ सञ्चित्य सैन्यं प्रशस्तम् ।

पारापारं तरन्तौ द्राग्धूमनौकाधिवासा-
त्तावाराच्छत्रुदुर्गाद्यातः स धीरौ निशीथे ॥ २२ ॥

शिखरिणी ।

पुरः पश्चाच्छत्रुर्नृपतिमुदधिश्लिष्टसरिति
न्यरौत्सीत्तं पार्श्वे समचरदुदासीनजनता ।
प्रतीच्यां प्राच्यां द्विट्पटलमथनं कर्तुमनसौ
द्विधा कृत्वा सैन्यं त्वरितमयतेतां द्विजवरौ ॥ २३ ॥

श्येनिका ।

अग्रतो रिपून्स्वमित्रसैनिका
मर्दयन्त इत्यधीशसोदरः ।
द्वीपमध्यदुर्गरक्षितो विद-
न्नन्वगाज्जघान शत्रुमण्डलम् ॥ २४ ॥

सुभद्रकम् ।

चोर इव प्लवोऽम्बुपिहितस्तरीरकृत भस्मसाद्द्रुतगति-
स्सीसकगोल इन्दुसदृशः स्फुटन्जनशतान्यनीनशद्गुरुः ।
आयसधूमनौ समुदयश्शतघ्न्युपगमैर्बभूव दलितः
कृत्रिमविद्युदद्भुतकराग्निनादहदमोघयोधनिवहम् ॥ २५ ॥

स्रग्विणी ।

मज्जनोन्मज्जनैर्लोहनौकापयो
वायसीवाचलद्वारि मायाविनी ।
दह्यमानोडुपाग्निच्छटालीलया
सा तमिस्रा विभाति स्म मध्याह्नभा ॥ २६ ॥

आर्यागीतिः ।

आसन्नविंशयोजन-
विस्तीर्णनदीस्थशत्रुनौद्विसहस्रम् ।
सद्विड्जनसर्वस्वं
भारतवीरप्रतापध्वस्तम् ॥ २७ ॥

अभ्यमित्र्यौ सांयुगीनौ धीरौ भरतवर्षजौ ।
समूलघातं प्रत्यर्थिसेनं द्वीपस्थमाहताम् ॥ २८ ॥

शार्दूलविक्रीडितम् ।

उल्कावद्धहुतप्तसीसगुलिकाश्रेणी मुहुः पातिता
दोषाभूतमहश्शतघ्न्यतिसरद्धूमान्धकारान्वितम् ।
भेरीभांकृतभर्त्सनैः प्रतिभटप्राणार्थमूर्जस्वलः
कालोऽचूचुरदारुराव रुधिरं पीत्वा शिवासंहतिः ॥ २९ ॥

अनुष्टुप् ।

अतुलाहंपूर्विकाविभीषणाहमहमिका ।
अहोपुरुषिका सासीदहोरात्राहवक्रिया ॥ ३० ॥

शम्भुनटनम् ।

महारणभुवि त्रुटितपादयुगलैर्लुलितबाहुभिरपास्तनयनै-
ररोद्यरिजनैरसकृदस्त्रपतितं गजहयं समततार्तनिनदम् ।
रथायुधमणीखचितभूषणपटैर्व्यपणयत्समरभूमिरखिला-
ण्यवीभिपत जन्तुपटलं पलरतं बहुभयङ्करकबन्धनटनम् ॥ ३१

क्रौञ्चपदा ।

व्याकुलयुद्धे परस्परमेव भीकररिपव उषसि मुहुरतुद-
न्द्राग्घतशेषा महाभयकम्पिताश्शरणमयुरधिकरणजयिनाम् ।
बाहुगणाहिव्रजं चरणोत्करोरुकमठपरिकरमासितशिरो
रुट्चयशैवालसञ्चयमद्भुतं रुधिरजलमभवदमितसरः ॥ ३२ ॥

तन्वी ।

कृत्तपदोऽपि प्रतिभटमवधीद्योधवरस्सपदि जहि जहीति
क्रुद्धमनंसीद्द्विजयिनमसुहृत्कश्चिदनूनयुधि नमनमेति ।
शत्रुमहार्षीद्द्रुतगतिचतुरः प्राप्तजयो झटिति हरहरेति
क्षिप्रमनावीद्द्विजयुगमतुलं सैनिकपङ्क्तिरथ नुहिनुहीति ॥ ३३ ॥

शिखरिणी ।

क्वचित्केशाकेशि व्यथितचिकुरो भिक्षुक इव
क्वचिन्मुष्टीमुष्टीवहतदशनोऽवित्तदशमी ।
क्वचिद्बाहाबाहि प्रशमितबलो वातकिसमः
क्वचिद्दण्डादण्डि द्विडसृगमितो रोचन इव ॥ ३४ ॥

मत्ताक्रीडा ।

वेगोद्यद्भूमानोऽभेद्यं समचलयदसमशितशरपटलं
यन्त्रं भूम्यां निक्षिप्तं प्रास्फुटदमितभटवरहृदयभयदम् ।
अश्वीयं पादातं शत्रुं स तमयति तमतुलितमदगजता
मेघद्वाराद्येधश्रेण्यक्षिपदसकृदखिलगतिशुचिगुलिकाः ॥३५॥

मत्तेभम् ।

पादातकौन्तिकभटक्षत्रुहास्तिपकसाहस्रचर्मिरथिका-
श्वारोहकावचिकशाक्तीकहैतिकधनुष्मन्मयारिपृतना ।
वीरोत्तम द्विजवरेण्यप्रतापशिखिनष्टा पतङ्गततिव-
दुर्हृच्चमूपतिरजय्योऽपि भारतभुजा शौर्यपञ्जरगतः ॥ ३६ ॥

सुमुखी ।

युवराजमथेक्षितुं क्षत-
व्यथितं विजयप्रमोदितम् ।
शिबिरेऽभ्रमतां सुहृद्वरौ
कृतिनौ महिदेवभूभुजौ ॥ ३७ ॥

मत्तमयूरम् ।

शय्याधीनं नीरपिपासुं क्षतबाहुं
तावात्मानौ लोकितुमिच्छुं रणधीरम् ।
रक्तस्रावाद्वक्तुमशक्तं बहु दृष्ट्वा
दुःखातीतावप्यणुमात्रं रुदितस्म ॥ ३८ ॥

उपस्थितम् ।

द्विजातिमणिमुर्वीभृद्वतंसो
जगाद करुणार्द्रस्वान्त इत्थम् ।

दयामयमहात्मन्भूमिदेव
त्वमर्हसि चिकित्सां कर्तुमस्य ॥ ३९ ॥

मन्दाक्रान्ता ।

असत्स्वामी सहजसदृशः सार्वभौमानुजोऽयं
श्रान्तश्शस्त्रक्षतनिजभुजोऽप्यावयोः सङ्गमिच्छुः ।
सर्वज्ञस्त्वं स्ववचनमवप्राणयैनं महात्म-
न्न स्यादीदृग्विजयमहिमास्माद्विना सार्थकोऽद्य ॥ ४० ॥

मौक्तिकमाला ।

शस्त्रचिकित्सां झटिति स कुर्व-
न्नौषधमस्मै तदुपरि यच्छन् ।
वार्तमकार्षीदमुमतिवेलं
तत्क्षणकालेऽद्भुतमहिमाढ्यः ॥ ४१ ॥

लक्ष्मीः ।

तिलकयकृत्प्लीहकशेर्वान्त्ररुधिरपललहृदयमन्या-
धमनिकपालं क्षितिदेवः प्रकृतिमगमयत परिशोध्य ।
स सपदि मूर्छालमभीक्ष्णं नरपतिसहजमुदमिमील-
त्प्रथितनृपालोऽन्नबुभुक्षुः सरभसमघसदमृतपथ्यम् ॥ ४२ ॥

उपजातिः ।

आश्वासुरत्यद्भुतवैद्यदत्त-
जीवातुहेतोर्युवराजचन्द्रः ।
भवन्स उल्लाघ उपोढदेह
उवाच वाचं मधुरां महान्तौ ॥ ४३ ॥

चञ्चरीकावलिः ।

नृसिंहौ मत्प्राणत्राणदीक्षागरिष्ठौ
भवन्तौ वन्देऽहं भारतीयावतंसौ ।
भवच्चारित्रं सन्देशपारावतेभ्यो
मयाज्ञायि प्रत्यक्षं युवामद्य वीक्षे ॥ ४४ ॥

शिखरिणी ।

क्वचित्केशाकेशि व्यथितचिकुरो भिक्षुक इव
क्वचिन्मुष्टीमुष्टीवहतदशनोऽवित्तदशमी ।
क्वचिद्बाहाबाहि प्रशमितबलो वातकिसमः
क्वचिद्दण्डादण्डि द्विडसृगमितो रोचन इव ॥ ३४ ॥

मत्ताक्रीडा ।

वेगोद्यद्भूमानोऽभेद्यं समचलयदसमशितशरपटलं
यन्त्रं भूम्यां निक्षिप्तं प्रास्फुटदमितभटवरहृदयभयदम् ।
अश्वीयं पादातं शत्रुं स तमयति तमतुलितमदगजता
मेघद्वाराग्नेयश्रेण्यक्षिपदसकृदखिलगतिशुचिगुलिकाः ॥३५॥

मत्तेभम् ।

पादातकौन्तिकभटक्षत्रुहास्तिपकसाहस्रचार्मिरथिका-
श्वारोहकावचिकशाक्तीकहैतिकधनुष्मन्मयारिपृतना ।
वीरोत्तम द्विजवरेण्यप्रतापशिखिनष्टा पतङ्गततिव-
दुर्हृच्चमूपतिरजय्योऽपि भारतभुजा शौर्यपञ्जरगतः ॥ ३६ ॥

सुमुखी ।

युवराजमथेक्षितुं क्षत-
व्यथितं विजयप्रमोदितम् ।
शिबिरेऽभ्रमतां सुहृद्वरौ
कृतिनौ महिदेवभूभुजौ ॥ ३७ ॥

मत्तमयूरम् ।

शय्याधीनं नीरपिपासुं क्षतबाहुं
तावात्मानौ लोकितुमिच्छुं रणधीरम् ।
रक्तस्रावाद्वक्तुमशक्तं बहु दृष्ट्वा
दुःखातीतावप्यणुमात्रं रुदितस्म ॥ ३८ ॥

उपस्थितम् ।

द्विजातिमणिमुर्वीभृद्वृतंसो
जगाद करुणार्द्रस्वान्त इत्थम् ।

दयामयमहात्मन्भूमिदेव
त्वमर्हसि चिकित्सां कर्तुमस्य ॥ ३९ ॥

मन्दाक्रान्ता ।

असमत्स्वामी सहजसदृशः सार्वभौमानुजोऽयं
श्रान्तश्शस्त्रक्षतनिजभुजोऽप्यावयोः सङ्गमिच्छुः ।
सर्वज्ञस्त्वं स्ववचनमवप्राणयैनं महात्म-
न्न स्यादीदृग्विजयमहिमासाद्विना सार्थकोऽद्य ॥ ४० ॥

मौक्तिकमाला ।

शस्त्रचिकित्सां झटिति स कुर्व-
न्नौषधमस्मै तदुपरि यच्छन् ।
वार्तमकार्षीदमुमतिवेलं
तत्क्षणकालेऽद्भुतमदिमाढ्यः ॥ ४१ ॥

लक्ष्मीः ।

तिलकयकृत्प्लीहकशेर्वान्त्ररुधिरपललहृदयमन्या-
धमनिकपालं क्षितिदेवः प्रकृतिमगमयत परिशोध्य ।
स सपदि मूर्छालमभीक्ष्णं नरपतिसहजमुदमिमील-
त्प्रथितनृपालोऽन्नबुभुक्षुः सरभसमघसदमृतपथ्यम् ॥ ४२ ॥

उपजातिः ।

आश्वासुरत्यद्भुतवैद्यदत्त-
जीवातुहेतोर्युवराजचन्द्रः ।
भवन्स उल्लाघ उपोढदेह
उवाच वाचं मधुरां महान्तौ ॥ ४३ ॥

चञ्चरीकावलिः ।

नृसिंहौ मत्प्राणत्राणदीक्षागरिष्ठौ
भवन्तौ वन्देऽहं भारतीयावतंसौ ।
भवच्चारित्रं सन्देशपारावतेभ्यो
मयाज्ञायि प्रत्यक्षं युवामद्य वीक्षे ॥ ४४ ॥

चन्द्रलेखा ।

साम्राज्यं कीर्तिरावीत्थं सार्वभौमस्य दुर्हृ-
त्सेनायाश्शौर्यमद्यैवाध्वंसि सर्वं भवद्भ्याम् ।
अन्वाजेकृत्य खिन्नोऽहं प्राणिषि द्राङ्महद्भ्यां
देवौ किम्मानवौ बह्वाश्चर्यतेजःप्रतीतौ ॥ ४५ ॥

तोटकम् ।

अनशिष्यमहं स्वबलेन समं
न युवामभविष्यतमत्र यदि ।
सफलं स कृषीष्टतमां युवयो-
रचिराय मनोरथमस्मदिनः ॥ ४६ ॥

अलोला ।

पाणौकृत्य जयार्थं रक्षन्तौ पृतनां मां
भूभर्तारमुपेतां मत्सोदर्यमतन्द्रम् ।
इत्थं भारतवीरौ विज्ञप्तौ युवराजे-
नानन्दाम्बुधिमग्नेनात्यन्तं कुशलेन ॥ ४७ ॥

उपजातिः ।

अवश्यकार्याण्यचिरेण कृत्वा
सत्कृत्य सैन्यं महितान्नपानैः ।
राजानुजाज्ञां प्रतिपालयन्तौ
चन्द्रान्तरीपं सहसापतुस्तौ ॥ ४८ ॥

भुजङ्गविजृम्भितम् ।

दृग्यन्त्रेण प्रेक्ष्यानीकं स्वमखिलधरणिपरिवृढो जयध्वजभूषितं
हृष्ट्वात्मानन्दं भेरीभिस्सकलनगरनरनिकरं वदन्पुटभेदनम् ।
सोऽलङ्कृत्याभ्युत्थानायागमदमितहितजनयुतस्तरङ्गचलत्प्लवा
तिक्रान्ताब्धौ क्रोशद्वन्द्वं सुखकरपवनपुलकितो महाविभवान्वितः ॥

पञ्चचामरः ।

सहस्रनावरूप्यसैन्यतल्लजं जयध्वजा-
न्वितं जगन्नुतो विलोक्य सार्वभौमसत्तमः ।

प्रहृष्य सोऽधिरुह्य नौमचर्चिका स्वसोदरे-
ऽभ्यमानभारतीयशेखरावपश्यदुत्सुकौ ॥ ५० ॥

शिखरिणी ।

महाब्रह्मं नत्वा विजयमुदितं क्षत्रियमणिं
परिश्लिष्य प्रेम्णा सुखिनमथ संचुम्ब्य सहजम् ।
अतीवानन्दाश्रुप्लुतनयनयुग्मो नरपति-
स्स योधानप्राक्षीदसकृदखिलान्नित्यकुशलम् ॥ ५१ ॥

वातोर्मी ।

पूर्वाह्णेऽसावगमद्राजधानी-
मानन्दाम्भोधिनिमग्नो महीशः ।
पौरैश्शश्वज्जयतूर्यैस्समन्ता-
त्स ब्रह्मक्षत्रियसोदर्य ऐडि ॥ ५२ ॥

शिखरिणी ।

बहुश्रेयान्कालोचितसकलकृत्यान्यवनिपः
स्समाप्यासौ सिंहासनमधिवसन्सभ्यनिवहम् ।
बभाणेत्थं यूयं शृणुत परिषद्या मम वचो
विलोक्येतामेताविह भरतवर्षोद्भवमणी ॥ ५३ ॥

वैश्वदेवी ।

अष्टाविंशत्यक्षौहिणीं द्वेषिसेनां
हत्वासद्राज्यं सोदरं रक्षतस्स ।
आभ्यां कः कार्योऽस्माभिरद्योपचारः
किं किम्वुक्तं सत्पार्षदा धर्मशास्त्रैः ॥ ५४ ॥

शुद्धविराट् ।

स्यात्तज्जन्मसदाप्यनर्थकं
यस्मिन्नास्ति कृतज्ञता नरे ।
यः प्रीणीतमहोपकारिणं
सश्श्लाघ्येत समस्तसज्जनैः ॥ ५५ ॥

अनुष्टुप् ।

भगवन्तं नित्यतृप्तं जीवन्मुक्तं द्विजोत्तमम् ।
कथमेतं तोषयेयं नश्वरैहिकवैभवैः ॥ ५६ ॥

उपजातिः ।

समस्तविद्यानिधिरिद्धकीर्ति-
रखण्डतेजा भुवनोपकारी ।
इतः परं ब्राह्मणवर्य एष
भवेन्ममप्राणसखो महात्मा ॥ ५७ ॥

वितानम् ।

इतः परं ब्राह्मणस्यादहिंसनीयः प्रजासु ।
मदीयराज्ये विदध्यात्करं न तस्यैव वृत्त्याः ॥ ५८ ॥

अनुष्टुप् ।

आचन्द्रतारकं विन्देद्वंश एतदुपक्रमम् ।
मद्भागधेये द्वात्रिंशत्सुवर्णान्प्रतिवासरम् ॥ ५९ ॥

उपजातिः ।

सर्वस्वतन्त्रो बहुसाधुकर्म-
धर्माधिकार्येष सखा मदीयः ।
निरङ्कुशो ब्रह्मकुलाग्रगण्यो
राज्येऽखिले मे विहरेदजस्रम् ॥ ६० ॥

वितानम् ।

दिवस्पृथिव्यावजस्रं प्रशासितुं शक्त एषः ।
गुणोज्ज्वलः क्षत्रियेन्द्रो भवेन्मदीयात्मबन्धुः ॥ ६१ ॥

मौक्तिकमाला ।

भारतवर्षं तदखिलमेषोऽद्यप्रभृति स्वैरमुपभुनक्तु ।
इत्थमुदित्वा स निजकुमार्या आगमनं संसदि विभुरैपीत् ॥ ६२ ॥

प्रहर्षिणी ।

जङ्घालो नृपतिभटो न्यवेदयत्तां
राजाज्ञां प्रमदकरां पतिंवरायै ।
पद्माक्षी जलदकचा सुवर्णगात्रा
सोत्कण्ठास्म भवति सा त्विराट्कुमारी ॥ ६३ ॥

# तारके पञ्चमः सर्गः ।

प्रहर्षिणी ।

पश्यन्ती नृपतनया सभां गवाक्षा-
   द्ध्यायन्ती पितृवचनप्रयोजनं सा ।
मात्राम्भोरुहवदना विभूष्यमाणा-
   शोभाढ्या त्वरितमनोरथौ हतेत्थम् ॥ १ ॥
स्यात्तच्चेज्जगति तथाहमेव धन्या
   किं देवः श्रितजनलालसां न देयात् ।
माता मे सपदि समीक्ष्य तद्यशांसी
   दृक्साहन्यहनि करोति कर्णपर्व ॥ २ ॥
तस्मै मे स्पृहयति मानसं मदीयं
   लावण्यं भवति हितं न किं विराजे
भाग्यायैव मम स आगतः कृतार्थो
   मत्पित्रेऽरुचदधुना तदीयमैत्री ॥ ३ ॥
तद्वीर्यं तदमलराजवर्चसं त-
   त्सौन्दर्यं तदभिनवं वयः प्रशस्तम् ।
तद्धैर्यं तदतुलकीर्तिवैभवं का
   लोकित्वा सपदि पतिंवरा न मुह्येत् ॥ ४ ॥
नूनं यत्प्रभृति मया विराडलोकि
   स्वान्तं मे परितपतीदृशं तदादि ।
जीवेयं यदि कृपया स उद्वहेन्मां
   किं जाने परहृदयं सदापरोक्षम् ॥ ५ ॥
इत्थं सा बहुभवितव्यमूहमाना
   वेषेणाचिरमबलाञ्जसा कृतेन ।

निस्त्रिंशीकृतसहजस्फुरत्कटाक्षै-
व्यच्छैत्सीत्प्रतियुवगाढधैर्यबन्धम् ॥ ६ ॥
शृङ्गारस्तरुणसभासदां तरुण्याः
प्राभूद्धृद्धनधनपश्यतोहरः सः ।
चन्द्रेशस्सरसिजलोचनां तदैषोऽ
हर्षीत्स्वान्तिकमुपवेश्य पुत्रिकां ताम् ॥ ७ ॥
वामोरूर्निजजनकेन भाष्यमाणा
ह्रीभारावनतमुखी क्षणप्रसूनैः ।
सानन्दं प्रियपदपीठमर्चयन्ती
पित्रेऽदात्प्रतिवचनानि मन्दमन्दम् ॥ ८ ॥
वामाक्षीं नृपतिकुमारिकां सुगुल्फां
रम्योष्ठीं स्मितवदनां ससावहित्थाम् ।
राजन्यो भृशमखिलाङ्गशोभनां ता-
मीक्षित्वा सपदि विमोहितो बभूव ॥ ९ ॥
मित्रस्य प्रियतमभावपद्धतिं तां
सर्वज्ञो झटिति सतारको विदित्वा ।
ईक्षित्वा परमसखा यतिष्ठमानां
प्राहर्षीत्क्षितिपसुतां सरोजनेत्राम् ॥ १० ॥
उद्वोढुं प्रभवसि चक्रवर्तिकन्यां
स्त्रीरत्नं शृणु तदवश्यमाप्यमेव ।
शङ्किष्ठाः प्रियसख मा त्वमार्य वन्द्ये-
त्यत्यन्तं हितमभणत्स विप्रमौलिः ॥ ११ ॥
राजन्यं स वदति सार्वभौम इत्थं
मत्कन्याद्य भरतवर्षराज्यलक्ष्म्याः ।
सापत्न्यं भृशमभिलष्यते भवाद्दृ-
ग्जामाता मम निखिलं कुलं पुनाति ॥ १२ ॥

प्रालेयाद्रिलसदुदङ्गितम्बदेशं-
पूर्वं नः पितृकुलमावसच्चिरस्य ।
यस्मादीदृगरचि पुस्तकेषु तस्मा-
दस्माकं समुचित एव बन्धुभावः ॥ १३ ॥
मह्यं कोऽपि मम विराण्मणिस्सतीर्थ्य-
स्स्वां पुत्रीमुपरतमातृकां रहस्ये ।
संदाय त्रिदिवमगात्पुरा मदर्थं
युध्वा मे प्रियतमदत्तपुत्रिकेयम् ॥ १४ ॥
मात्रास्या मुहुरहमित्यभाषिषीयं
नित्यं त्वद्गुणगणचिन्तनामृतेन ।
सञ्जीवन्त्यधिकुरुते सदान्नपाने
मद्बाला सहृदयते तपस्यतीत्थम् ॥ १५ ॥
श्रुत्वा तद्धितकरचक्रवर्तिवाक्यं
प्रत्यूचे चतुरमतिस्स भूमिदेवः ।
नाथेतैष नरपते भवत्कुमार्याः
को मुच्येत्स्वकरगतामभीष्टलक्ष्मीम् ॥ १६ ॥
अन्योन्योचितगुणरूपयौवनाढ्यौ
संयुक्ताविव धनवृद्ध्युदारभावौ ।
दिष्ट्यैतौ मधुरवधूवरौ कुलीनौ
भूपायं शुभदिवसो वयंकृतार्थाः ॥ १७ ॥
आशंसे जननुतवीरसूर्भवेस्त्वं
मङ्क्ष्क्ष्मापतिरिति पुत्रिकां ब्रुवाणः ।
कह्लारस्रजमभितो गलं विराज-
स्सम्प्रीत्या सदसि तयासयाम्बभूष ॥ १८ ॥
कामो मे त्वमिव करेण नाङ्गनान्या
गृह्येतेति भरतवर्षराज्यलक्ष्म्याः ।

हस्ताग्रं निजमभिगृह्णतो विराजो
   दृष्ट्वायौदृगवनिपालकस्य पुत्र्याः ॥ १९ ॥
पाणीक्षाहृदययुगानि मेलयन्तौ
   द्रागेतौ सकलविधैस्समासजेताम् ।
ज्योत्स्नेन्दू इव निरतानुबन्धयुक्तौ
   स्यातामित्यमनुत तत्सदस्यपूगः ॥ २० ॥
सम्पूर्णोडुपकलिता यथा त्रियामा
   सा तन्वी विनययुतेव साधुविद्या ।
प्रातानीन्मुदमभितस्स्वभर्तृयुक्ता
   लोकानां सुजनगतेव राज्यलक्ष्मीः ॥ २१ ॥
कार्यज्ञाविति पितरौ वधूमणेस्तौ
   प्रावक्तां निजदुहितुः पतिं विनम्रौ ।
बालेयं प्रियतनयावयोस्सुशीला
   दत्ता सम्प्रति सहबाष्पधारया ते ॥ २२ ॥
एषा त्वत्पदकमले सदोपकर्तुं
   सन्नद्धा मृदुगमना ममैकपुत्री ।
आयत्ता त्वयि ललना मनोवचोङ्गै-
   स्स्यात्यक्त्वा निजपितराविहाश्रुपूर्णौ ॥ २३ ॥
त्वत्पत्नी भवति पतिंवरा सुशीला
   सम्पोष्टुं सह भवता कृताभिषेका ।
कर्मक्ष्मां प्रियतनयावयोरियं त्वं
   सर्वज्ञः प्रकथनयोग्यमस्ति किं ते ॥ २४ ॥
सोत्कण्ठौ रुचिरमलङ्कृतौ सखीभि-
   र्नीयेतेस्म तरुणजम्पती क्षणेन ।
अन्योन्याधिकरमणीयतान्वितौ तौ
   ह्रीमन्तौ स्मितललितौ विहारसौधम् ॥ २५ ॥

सन्ध्यायामुदवसितानि राण्निदेशा
दास्थानोपगतजना ययुः प्रहृष्य ।
भूदेवं स तमवनम्य चक्रवर्ती
स्वागारं मुदितमना ययौ कृतार्थः ॥ २६ ॥

सुस्वासम्मदपरिपूरितत्रियामां
कृत्वा सोऽचिरमखिलप्रभातकृत्यम् ।
अध्यास्ते स्म सदसि दिव्यभद्रपीठं
ग्रावाग्रं हरिरिव साधु सार्वभौमः ॥ २७ ॥

गव्यूतिद्वयपरिमेयनिष्कुटान्ते
सैकान्नत्रिदशसहस्रपीठरम्या ।
आस्थान्यास्त उपविवेश तत्र नाना
देशीयाधिपविसरः प्रमोदयुक्तः ॥ २८ ॥

पार्षद्या द्विजयुगलं विलोककाश्श्री
युक्तां भूपतितनयां निरीक्षकास्ते ।
कार्यज्ञा स्फुरदुचितासनोपविष्टा
अन्योन्यं सदसि तदा ब्रुवन्प्रतीपम् ॥ २९ ॥

पाषाणः प्लवतइतः पयस्सु चित्रं
तूलः सम्प्रति सहसा निमज्जतीह ।
चन्द्रेशस्तरुणसुतेन वृद्धवप्ते
वत्रातश्चतुरजनेन पुण्यभूमेः ॥ ३० ॥

नूनं तावतुलितदिव्यशक्तिमन्तौ
पाश्चात्यप्रकटितशत्रुधूमकेतू ।
क्ष्माचक्रं चिरमपि शासितुं समर्थौ
मित्रं यो भवति तयोस्स एव धन्यः ॥ ३१ ॥

इत्थम्प्राज्वलदनिवार्यकोपवह्नि
मौनीनां बहुमहनीयकर्मभूमेः ।

सर्वत्राहितबलकाननं दिधक्ष
त्येवाद्यात उचित एतयोस्सुषन्धिः ॥ ३२ ॥

पीत्वा खल्वनवसरद्विजाप्तिहालां
दत्वालम्प्रियतनयामणिं विराजे ।
पाश्चात्यप्रकटितमन्युहेतुभूतः
किं धीमान्स्वकुलकलङ्क एष भूपः ॥ ३३ ॥

पित्र्यं सच्छ्रुतमपि हन्ति पादघातं
स्वीकृत्य द्विजकुलबन्धुतां स एषः ।
पाश्चात्यावनिवलये समन्ततोऽद्य
प्राचीन श्रुतिशिरसां मतं व्यशिक्षत् ॥ ३४ ॥

स्वाचारं जनपतिनावलम्बयेते
तं पुण्यावनिगुरुतामदीदृशेताम् ।
पश्यैनौ द्विजकुलशेखरावुदेति
प्राग्देशे व्यसनमुपैति पश्चिमेऽर्कः ॥ ३५ ॥

भूदेवोत्तमरचितोरुयन्त्रपक्षी
शक्तो द्वादशशतयोजनानि गन्तुम् ।
तत्राप्याचितभरधारणे समर्थो
नाकेऽहर्दिवमथ सज्जितो बभूव ॥ ३६ ॥

आस्थान्यामिति स उवाच भूमिदेव
स्सर्वेमां शृणुत सभासदो महान्तः ।
वात्सल्यादिह गुरुणेव साधुशिष्य
स्स्निग्धो मेऽक्रियत महीभृतात्मतुल्यः ॥ ३७ ॥

तां जीवान्तकशकबाणपातितां द्वि
टसंरुद्धाम्बहुरुदतीं सनिर्गताशाम् ।
रक्षित्वेदृशमनुकम्पया मुमोच
स्वेच्छायै श्रुतिमतपुण्यभूमिहंसीम् ॥ ३८ ॥

अन्योन्यान्तरकलहैर्निजात्मजानां
तां वेदप्रियभयकृच्छ्रकेशशिष्टया ।
सन्त्रस्तां सुखयति भाग्यदेववत्स
क्ष्मानाथो बुधनुतकर्मभूमिसाध्वीम् ॥ ३९ ॥
बान्धव्यं रिपुकुलपीडनाय चन्द्र
द्वीपस्याद्य भवति दिव्यपुण्यभूमेः ।
प्राचीनश्रुतिमतसाधुकर्मसिद्ध्यै
सर्वत्र द्विजकुलसम्मदोपलब्ध्यै ॥ ४० ॥
जामातुः प्रियतमकर्मभूमिलक्ष्मीं
प्रापय्य त्वमनुज शीघ्रमेहि धीमन् ।
शासित्वेत्युरुहरणं निजात्मजायै
दत्त्वैष्टद्विजयुगलं स सार्वभौमः ॥ ४१ ॥
आकाशाध्वनि युवराजमुद्धरन्स
क्ष्मादेवं तरुणवधूवरौ पतत्री ।
संडीय द्रुतमपि योजनार्धमूर्ध्वं
सायं प्राग्दिशमस्रपन्मनोजवेन ॥ ४२ ॥
आकीटं कृशमपि भौमवस्तुजालं
दृग्यन्त्रैस्सपदि विलोक्य तैर्दविष्ठम् ।
संस्पृष्टैर्निरुपमसौख्यदानिलेने
व स्वप्नेऽद्भुतगतिरन्तरान्वभावि ॥ ४३ ॥
सम्भूयान्नृपतनयस्य तारकस्ये
त्यायुष्यं महितसुखं सतोरणेषु ।
लेखित्वा विबुधपुरीजनो महेना
भ्युत्थानप्रमुदितमानसो बभूव ॥ ४४ ॥
स्वाधीनेऽत्र सकलचक्रवर्तिसैन्ये
सङ्कीर्णेऽखिलभुवने निजप्रतापे ।

आयातीति नृपसुतस्सबन्धुमित्र
स्तेऽनन्दन्विबुधपुरीजना वदन्तः ॥ ४५ ॥

स्वच्छन्दं श्रुतिगदितं यथेष्टकर्मा
प्सोम्यात्माभिलषितजीवनं पुनस्स्यात् ।
षट्कर्मेति विबुधपत्तनेऽवगल्भां
चक्रे पावनमुपचित्य गार्हपत्यम् ॥ ४६ ॥

पुण्येनाखिलभरतावनीजनानां
राजन्यप्रियतनयस्सदारमित्रः ।
सौधेऽवातरदचिरेण नाकयाना
त्प्रत्यूषे निजपितृचुम्बितो यशस्वी ॥ ४७ ॥

तिष्ठद्भुक्षितिपसुतं स चक्रवर्ति
भ्राता प्राज्यभरतवर्षपालनाय ।
भूदेवैर्जननुतमभ्यषीषिचत्तं
द्राक्सिंहासनमधिरोपयन्कृतज्ञः ॥ ४८ ॥

गोविप्रानवनिगमोक्तधर्मरीत्या
साम्राज्यं चिरमिह पालयेत्युदित्वा ।
भूपित्वाश्चितमकुटेनमित्रशीर्षं
कर्तेत्थं स भवति तारको नृपाणाम् ॥ ४९ ॥

राजन्यो जननुतसार्वभौमपुत्री
जानिः प्राज्यभरतवर्षचक्रवर्ती ।
आस्थानोपगतसमस्तभारतीय
क्षोणीशान्प्रियवचनान्यवोचदित्थम् ॥ ५० ॥

भो भोस्सुप्रजस इलेश्वरा महान्त
श्शृण्वन्तु प्रथितसभासदो भवन्तः ।
मामित्थं विरचितवान्स चक्रवर्ती
स्वच्छन्दाधिपमिह सर्वकर्मभूमेः ॥ ५१ ॥

कारुण्यादिह सुदिवा वयं स्वतन्त्राः
श्रीमन्तो बुधनुतचक्रवर्तिनःस्मः ।
कुर्वाणास्सततपरस्परानुकूलं
सुख्यामागमनियतात्मराजकृत्यम् ॥ ५२ ॥
शुभ्रांशुं रविरिव मामदीदिपद्यो
नामाद्याप्रथयत सार्वलौकिकंमे ।
सर्वज्ञो द्विजमणिरुष्णरश्मितेजा
श्श्रीमान्सैष भरतवर्षभाग्यदेवः ॥ ५३ ॥
मन्मित्रं मम शरणंमदिष्टदैवं
भूदेवं सकलजगद्गुरुं स्वतन्त्रम् ।
नित्यं संश्रितजनतारकं प्रणम्य
स्वच्छन्दं पृथुभरतावनिं भुनज्मि ॥ ५४ ॥
सन्मालामभिनवसार्वभौम इत्थं
संस्तुत्यात्मसखमतीव स्तूयमानः ।
कण्ठं न्यक्षिपदभितोऽग्रजातिमौलेः
स्थाने भूपतिषु कृतज्ञता महत्वम् ॥ ५५ ॥
द्वेष्टा त्वामिह यदि कोऽपि मन्दभाग्य
स्साहाय्यं मम सपदि त्वमर्थयस्व ।
भाषित्वेति स दुहितुः पतिं जगाम
भ्रातात्मालयमथ चक्रवर्तिमौलेः ॥ ५६ ॥
उद्यानं तत इव चैत्रिकस्स्वगेहं
प्राप्य द्रागभिजनबन्धुवार्धिचन्द्रः ।
स्वीकृत्योचितललनां गृहस्थरायं
सन्तानं बहुतनुते स तारकोऽसौ ॥ ५७ ॥
प्राव्राजीद्रुदति न कोऽपि पुण्यभूमौ
सर्वत्राखिलमनुजोऽभवत्स्वतन्त्रः ।

पद्धत्यास्य नहि बभूव दुष्टबाधा
द्याशास्ते जनमिदमित्थमेव काव्यम् ॥ ५८ ॥

शार्दूलविक्रीडितं ।

भव्यं नागरविक्रमं गजहयं ज्ञानब्रुवाणश्रुतिं
भक्तिं राजितजन्यरङ्गजयनं भोगक्रियोदारताम् ।
जग्धिं यज्ञिययत्नकृद्द्विजवराचारं प्रभासः क्षमां
माम्बन्धो भवनं भवान्व्रजतु स्मृतिं बोधतां भद्र माम् ॥५९

# चक्रबन्धः



( तृतीय चक्रे ) नारायणदासः
( षष्ठ चक्रे ) विजयनगरम्
इत्युद्दिष्टनामनी

# शुद्धपत्रम्.



### प्रथमसर्गे

| | | |
|---|---|---|
| २९ | श्लोके | ( तरा ) रता |
| ३९ | ,, | ( दृज्ञा ) ज्ज्ञा |
| ४२ | ,, | ( दि ) दु |
| ५७ | ,, | ( म्रस ) च्छम |

### द्वितीयसर्गे

| | | |
|---|---|---|
| १९ | ,, | ( ऽवा ) ऽव |
| २६ | ,, | ( सनहि ) हितम |

### तृतीयसर्गे

| | | |
|---|---|---|
| ३ | ,, | ( कैः ) कः |
| ८ | ,, | ( ष्टा ) ष्ठा |
| ३२ | ,, | ( न न्तो ) ना ना |

### चतुर्थसर्गे

| | | |
|---|---|---|
| ३१ | ,, | ( ण्य ) ष्य |